## पृथिवी पादौ।। १ ।।

सा - अथ प्रजापतेः कृत्स्नप्रपञ्चमयशरीरात्मकतामाह-तस्येति। तस्य विराडाख्यस्य प्रजापतेः शिरः उत्तमाङ्गं द्यौः द्युलोक आसीत्। तथा उरः वक्षः, तदुपलक्षितो मध्यदेशः, अन्तरिक्षम् एतदाख्यं यद् द्यावापृथिव्योर्मध्यस्थानीयं मध्यभाग आसीत्, तत्। "अन्तरा क्षान्तं भवति" (नि. 2.3.1) इति निरुक्तम्। तथा 5 मध्यं मध्यभागान्तःप्रदेशवर्ति मूत्रोदकम्,-आश्रयिण्याश्रयशब्दः-, तत् समुद्रः आसीत्। तथा पृथिवी प्रथिता भूमिः, पादौ पादद्वयस्थानीया आसीत्। एतावता तस्य लोकत्रयात्मकत्वमुक्तम्। अस्य द्योशिरस्त्वाद्यवयवरूपत्वम् उपनिषदि वैश्वानर-विद्यायाम् "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः"(छा० उ० 5.18.2) इत्यादिना श्रुतम्।। १ ।। 10

भ-तस्य ब्रह्मणोऽवस्थाभेदात्मनः प्रजापतिविराड्देवस्थावरादिपदवाच्यस्य द्यौः शिर आसीदुरो वक्षो मध्यदेह इत्यर्थः; सोऽन्तरिक्षलोकोऽभवत्। मध्यदेहमध्यस्थान्तरं, वस्तिमूत्राश्रय इत्यर्थः, [स] समुद्रः। पृथिवी तथा पादौ। इति त्रैलोक्यात्मकत्वं प्रजापतेरुक्तम्। तदेवान्तरहस्ये विवक्ष्यते-"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः"(छा० उ० 5.18.2) इति।। 15

## 6. स वा इदं विश्वं भूतमसृजत। तस्य सामोपजीवनं प्रायच्छत्।। 17

---

1. S. पृथ्वी for पृथिवी.
2. P. adds तत्- before प्रजा०. & AB. अस्य for second तस्य;
3. Bl. om. द्यु from द्युलोकः, Bl. om. तथा.
4. P. एतदाख्यो द्यावापृथिव्योर्मध्यभागः; A एतदाख्ययोर्द्यावापृथिव्योः स्थानीयं मध्यभागम्; Bl. एव तदाख्यं यद् द्यव पृथिव्योः 'मध्यं' स्थानीयं मध्यभागम्...for एतदाख्यं....भागः, B. मध्यं स्था० for मध्यस्था० ;
5. AP. om. तत्; A. अन्तरि for अन्तरा, BBl अन्तरिक्षमन्तं भवतीति निरुक्तिः for अन्तरा..... निरुक्तम्.and ABBl. कथं for तथा.
6. B. ०वर्ती [मूत्र?] श्रयः for ०वर्ति....०शब्दः; Bl. adds अतः before तत्; AB. समुद्रम् for समुद्रः.
7. P. om. भूमिः.
8. Bl. "द्यौः शिरस्" for द्यो....
9. B. एतस्य वैश्वानरस्य विद्या यस्य मूर्धैव for एतस्यात्मनो०
12. RAl. द्यौरशिरः for द्यौः शिरः; R. वन्तो, Al. वतो for वक्षो.
13. RAl. तोकः for तथा, अन्तरहस्ये see CN.
15. RAl. मूर्धेव for मूर्धैव; Al. सुतेजसा for सुतेजाः.

सा - उक्तलोकत्रयात्मकत्वसिद्धये तत एव जगत्सृष्टिम्, सृष्टस्योपजीवनाय सामप्रदानं चाह-स वै इति। वैशब्दः प्रसिद्धौ। स खलु प्रजापतिः इदं प्रतीयमानं विश्वं भूतं कृत्स्नं देवतिर्यङ्मनुष्यादिभूतजातम् असृजत सृष्टवान्। सृष्टस्य तस्य उपजीवनं जीवनसाधनं साम प्रायच्छत् प्रकर्षेण दत्तवान्॥

5 भ - स इदं दृश्यमानं विश्वं भूतं देवतिर्यङ्मनुष्यादिलक्षणम् असृजत। तस्य भूतस्य सामैवोपजीवनं प्रायच्छदित्याह-य इदमिति। वक्ष्यमाणं तदधिष्ठं साम देवादीनाम [त्य]न्तमाप्यायनं प्रायच्छदित्यर्थः॥

**7. उपजीवनीयो भवति य एवं वेद॥ २ ॥**

सा - अथ वेदितुः फलमाह-उपेति। यः पुमान् एवं जगतः उपजीवनप्रदानं

10 वेद जानाति, स सर्वैः उपजीवनीयो भवति। एनं सर्वे उपजीवन्तीत्यर्थः। धनकनकादिभिराढ्यो भवतीति यावत्॥ २ ॥

भ - अथैवं विदुषः स्तुतिः-उपजीवनीय इति। स्पष्टोऽर्थः॥

**8. तद्योऽसौ क्रुष्टतम इव साम्नः स्वरस्तं देवा उपजीवन्ति। योऽवरेषां प्रथमस्तं मनुष्या यो द्वितीयस्तं गन्धर्वाप्सरसो यस्तृतीयस्तं**

**15 पशवो यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते यः पञ्चमस्तमसुररक्षाꣳसि योऽन्त्यस्तमोषधयो वनस्पतयो यच्चान्यज्जगत्। तस्मादाहुः**

**17 सामैवान्नमिति। साम ह्येषामुपजीवनं प्रायच्छत्॥**

---

1. BBl. ०त्रयात्मकता० for ०त्रयात्मकत्व० ; A. ०सृष्टिसृष्टस्य च जीवनाय, B. ०सृष्टिसृष्टस्य जविनाय, Bl. ०सृष्टिसृष्टस्योपजविनाय for सृष्टि सृष्टस्योप०

3. P. कृत्स्न for कृत्स्नं, BlB. om. सृष्टस्य.

4. B. जीवनं for जीवनसाधनम् ; Bl. om. साम.

5. RAl. read यः instead of सः though in the commentary the reading already given was सः. Both Mss after आह give the whole text upto प्रायच्छत्. & तदधिष्ठं see CN.

12. RAl. read उपजीवनीयो भवति य एवं वेद स्पष्टोऽर्थ इति। भवति य एवं वेद स्पष्टोऽर्थ इति.

17. My T. add एव before हि.

सा - जगतः सामोपजीवनं प्रायच्छदित्युक्तम्। तस्य कं भागं के उपजीवन्तीति जिज्ञासायां तद् विभज्य दर्शयति-तद्योऽसाविति। अस्यायमर्थः-उपांशुव्यतिरिक्ताः सर्वा वाचो मन्द्रमध्यमोत्तमभेदेन त्रिस्थाना भवन्ति। तत्र मन्द्रस्थाना वाक् सप्तयमा क्रुष्टादिसप्तस्वरूपेत्यर्थः। क्रुष्टादय एवात्र यमा उच्यन्ते। ते चोत्तरोत्तरं नीचा भवन्ति। एवं मध्यमोत्तमस्थाने अपि वाचौ वेदितव्ये। अमुमेवार्थं शौनक आह पार्षदे-"त्रीणि मन्द्रं मध्यममुत्तमं चस्थानान्याहुः सप्तयमानि वाचः। अनन्तरश्चात्र यमोऽपिशिष्टः सप्त स्वरा ये यमास्ते पृथग्वा॥" (ऋ० प्रा० 13.17) इति। अनन्तर इत्यस्य वाक्यस्यायमर्थः-येषु यमेषु अनन्तरः अव्यवहितो यमः सः अविशिष्टः अस्पष्टविशेष इत्यर्थः। विप्रकृष्टो यमो भेदेन ज्ञातुं शक्यते न संनिकृष्ट इति। तथा सप्त स्वरा इत्यस्यायमर्थः-ये यमा इत्युक्ताः सप्त ते स्वराः षड्जादयः। पृथग्वा क्रुष्टादयः षड्जादिभ्योऽन्ये वा बोद्धव्या इति। एवं सति तत् तेषु क्रुष्टादिसंज्ञकेषु षड्जादिसप्तस्वरेषु मध्ये योऽसौ साम्नः संबन्धी क्रुष्टतम इव, इवेत्येवकारार्थे, अत्यन्तमुच्चैः स्वर एवास्ति गानकाले तं स्वरं देवा इन्द्रादय उपजीवन्ति तेन तृप्ता भवन्तीत्यर्थः। एवमुत्तरेष्वपि योज्यम्। यः च अवरेषाम् अवशिष्टानां षण्णां मध्ये प्रथमः मुख्योऽस्ति, तम् मनुष्या उपजीवन्ति। द्वितीयं गन्धर्वाप्सरसः गन्धर्वाः अप्सरसश्च उपजीवन्ति। तृतीयं गवादयः पशवः। चतुर्थं पितरः। किंच, ये प्राणिनः सर्वेषु ब्रह्माण्डेषु शेरते निवसन्ति, ते च। पञ्चमं स्वरम् असुररक्षांसि असुराश्च रक्षांसि च। योऽन्त्यः षष्ठः स्वरः तम् ओषधयो वनस्पतयश्च।

---

1. Bl. B. कस्य for तस्य.
2. Bl. B. विविच्य for विभज्य & Bl. B. ०रिक्त सर्वा वाक् for -रिक्ताः. . .
3. Bl. B. भवति for भवन्ति ; Bl. AB. सप्तधा for सप्तयमा.
4. Bl. P. om. अत्र
5. P. "परिषदमन्द्रमध्यमोत्तमस्थानान्याहुः" AB. परिषदे-त्रीणि• for पार्षदे....
7. अनन्तरः see CN.
8. P. विशिष्टः for विशेषः.
9. P. om. तथा.
10. A. सप्तैते for सप्त ते Bl. om. ते; P. षड्जादयः पृथग्वा। क्रुष्टादयः पृथग्वा षड्जादिभ्यः for षड्जादयः..& B. Bl. (अ)न्य एव for (अ)न्ये वा;
11. P. om. इति; Bl. om. तत्.
12. Bl. (अ)र्थः for (अ)र्थे. and Bl. उच्च० for उच्चैः.
13. Bl. योज्यः for योज्यम्. and A. om च.
15. Bl. A. गवादिपशवः for गवादयः पशवः.
16. P. सर्वे for सर्वेषु; AB. Bl. om ते च.

यच्चान्यद् अनुक्तं जगत् जातमस्ति, तच्चेति। कृत्स्नजगतः सामोपजीवित्व-प्रसिद्धिरुक्तापेक्षयेत्याह -तस्मादाहुः सामैवान्नमिति। साम ह्येषामुपजीवनं प्रायच्छदिति। यस्मादुक्तेन प्रकारेण देवादयः सामोपजीवन्ति तस्मात् सामैवान्नमिति ब्रह्मवादिन आहुः ब्रुवते। तदेवाह- हि यतः एषां देवादीनां सामोपजीवनं प्रायच्छत् प्रजापतिः अत आहुरित्युक्त-
5 प्रकारसामान्यत्वप्रसिद्ध्यनुवादोऽयम्॥

भ - अथ सर्वस्या वाच उपांशुव्यतिरिक्तानि त्रीणि स्थानानि भवन्ति मन्द्रं मध्यमुत्तममिति। एकैकं स्थानं सप्तयमम्। क्रुष्टादयः स्वरा यमा उच्यन्ते। ते च उत्तरोत्तरं नीचा भवन्ति। यथोक्तं शौनकेन भगवता परिषदा[यां] शिक्षा[याम्]-

"त्रीणि मन्द्रं मध्यममुत्तमं च
10 स्थानान्याहुः सप्तयमानि वाचः।
अनन्तरश्चात्र यमोऽविशिष्टः
सप्त स्वरा ये यमास्ते पृथग्वा॥"

(ऋ० प्रा० 13. 42-45) इति।

**अनन्तरश्चात्र यमोऽविशिष्ट** इति। च अत्र एषु अनन्तरो यमेषु अनन्तरोऽव्यवहितो यतः
15 अविशिष्टः। अस्पष्टविशेष इत्यर्थः। विप्रकृष्टो यमो भवेदेनं ज्ञातुं शक्यो न संनिकृष्ट इति। सप्त स्वरा ये यमास्ते पृथग्वेति। ये यमा इत्युक्ताः सप्त ते स्वराः षड्जादयः पृथग्वा षड्जादिभ्योऽन्ये क्रुष्टादय इति। एवं स्थिते सप्तानां यमानामुपजीविकानि भूतानि [वि] भज्य दर्शयति-तद्योऽसाविति। तदिति वाक्योपक्रमे निरर्थकः। तस्मिन्नुक्ते विषय इति वा। यो[ऽसौ] क्रुष्टतम इव, इवेत्येवकारार्थेऽत्र वर्तते, साम्नः संबन्धी क्रुष्टतमः स्वरस्तं
20 देवा उपजीवन्ति। योऽवरेषां क्रुष्टादर्वाचीनानां स्वराणां प्रथमस्तं मनुष्या उपजीवन्ति।

---

1. Bl. जगत् for जगतः and Bl. AB. -जीवनत्व for -जीवित्व०;
2. Bl. AB. उक्तापेक्षा for उक्तापेक्षया; P. om. साम....प्रायच्छदिति.
3. P. om. यस्मादुक्तेन.....। तदेवाह. हि. and B. om. ब्रह्मवादिन आहुर्ब्रुवते.
4. B. om. हि; B. एतेषां for एषां. P. देवानां for देवादीनां.
5. A. सामान्यप्रसिद्ध; Bl. सामान्नत्वप्रसिद्ध्या for सामान्यत्वप्रसिद्धि.
7. RAl. मध्यमूत्रमति for मध्यममुत्तममिति.
11. R. अनन्तरश्चान्त, Al. अनन्तरश्चानु for अनन्तरश्चात्र.
12. स्वरा ये see CN.
14. R. अनन्तरश्चान्त, Al. अनन्तरश्चात for अनन्तर०
15. अविशिष्टः see CN.
19. RAl. क्रुष्टतम इवेत्येन्न (R. न्ते) वकारु (R. र) ण्येत्यत्र (R. न्न) वर्तते for क्रुष्टतम इव०...वर्तते.

द्वितीयं गन्धर्वा [प्सरसः] गायनाप्सरस उपजीवन्ति। तृतीयं पशवो गवाश्वादय उपजीवन्ति। चतुर्थं पितरो ये चाण्डेषु शेरते द्विजा जन्तवस्ते चतुर्थमुपजीवन्ति। पञ्चममसुररक्षाꣳसि असुरा रक्षांसि चोपजीवन्ति। योऽन्त्योऽतिस्वार्यस्तमोषधयो वनस्पतयश्चोपजीवन्ति। यच्चान्यदुक्तेभ्यो जगज्जङ्गमं तच्चान्यमुपजीवन्ति। यस्मादुक्तेन प्रकारेण सामोपजीवन्ति देवादयस्तस्मादाहुर्ब्रह्मवादिनः "सामैव सर्वस्यान्नम्" इति। 5
तस्मादित्युक्तस्य विवरणं साम ह्येषामुपजीवनं प्रायच्छद् इति॥

**9. उपजीवनीयो भवति य एवं वेद॥ ३ ॥**

सा - उक्तार्थस्य वेदितुः फलमाह-उपेति। वृत्तोऽर्थः॥ ३ ॥

भ - अथ विदुषः फलं पूर्वोक्तमुपसंहरति-उपजीवनीयो भवति य एवं वेद [इति]॥ 10

**10. तस्य ह वा एतस्य साम्न ऋगेवास्थीनि।**
**स्वरो माꣳसानि। स्तोभा लोमानि॥**

सा - अथ गातव्यस्य साम्नः प्ररोचनार्थं प्रसङ्गाद्विशिष्टफलसाधनानि कानिचित्साम्नो ध्यानानि विदधाति। तत्रादौ पुरुषत्वध्यानायावयवकल्पनामाह-तस्य हेति। तस्य ह वै उक्तमहिमोपेतस्यैवैतस्येदानीं निर्दिश्यमानस्य साम्नः ऋगेवास्थीनि। 15
ऋचः साम्नो मुख्याधारत्वादस्थित्वकल्पनम्। स्वराणामपि ऋगाश्रितत्वादस्थि-बहिर्भूतमांसत्वकल्पनम्॥ स्तोभानामपि ततोऽपि बहिर्विषयत्वाल्लोमत्वकल्पनम्॥

भ - अथ साम पुरुषाकारेण निरूपयति-तस्य ह वेति। स्वरः क्रुष्टादिलक्षणः। सुज्ञातमितरदिति। अस्मिन् प्रकरणेऽनुष्ठानानधिकृता गुणा उच्यमानाः प्रचोदनार्थास्तथा ज्ञानेन समृद्धिहेतव इति द्रष्टव्यम्। केवलार्थानुव्याख्याने प्रयोजनाभाव इति॥ 20

---

3. RAl. om. असुरा रक्षांसि. and RAl. वा for च; अतिस्वार्यः see CN.

11. My om. ह वा एतस्य.

13. P. प्रजापतिरादिष्टफलसाधनस्वाध्यायाध्ययनार्थं च for अथ.........साधनानि; Bl. अधिकृतस्य for अथ गातव्यस्य.

14. B. अध्ययनानि for ध्यानानि; P. पुरुषत्वेनावयवo for पुरुषत्वo....

15. After ऋगेवास्थीनि A. continues तस्य ह वा एतस्य योग्यऋचः साम्नो B. Bl. एवमुत्तरयोरपि तस्य ह वा एतस्य इति योज्यम्। ऋचः....

17. P. भूतत्वेन for भूत. and B. om. second अपि.

19. R. उच्यतानात्, Al. उच्यतानाः for उच्यमानाः.

**11. यो ह वै साम्नः स्वं यः सुवर्णं वेद स्वं च ह वै साम्नः सुवर्णं च भवति। स्वरो वाव साम्नः स्वं तदेव सुवर्णम्॥**

सा - अथ तस्यैव साम्नः स्वत्वसुवर्णत्वयोर्ध्यानमाह-यो हेति। यो ह वै साम्नः स्वं द्रव्यं वेद यश्च स्वविशेषरूपं सुवर्णं शोभनवर्णोपेतं हिरण्यं वेद स तद्द्वयस्य
5 वेत्ता स्वयमेव साम्नः स्वसुवर्णयोः स्थानीयो भवति, ज्ञातं सामविशिष्टफलसाधनं भवतीत्यर्थः। किं तत् साम्नः स्वं सुवर्णं चेत्याकाङ्क्षायामाह-स्वरो वावेति। क्रुष्टादिसप्तभेदभिन्नः स्वर एव साम्नः स्वं स्वराधीनत्वात् सामस्वरूपस्य तदेव स स्वर एव सुवर्णम्॥

भ - अथान्यज्ज्ञातव्यविवक्षुस्तत् ज्ञानं तावत् प्ररोचयति-यो हेति। स्वं धनं
10 सुवर्णं धनविशेष इति। किं तदुभयं यस्य ज्ञानेन साम्नः स्वं सुवर्णं च भवतीति तत्राह-स्वरो वा वेति। स्वरः क्रुष्टादिलक्षणः। अथ वर्गाश्रयाणां स्वराख्यवर्णानामकारादीनां गीत्यात्मके विकारः स एव धनं सामान्यम्, विशेषश्च सुवर्णात्मक इति। किं पुनस्तत्साम्नः स्वत्वं सुवर्णत्वं च वेदितुं पुरुषार्थात्मकं विवक्षितम्? उच्यते। साम्नः संबन्धी स्वरो यथा स्ववत् सुवर्णवच्च प्रिय उपजी[वनी]यो भवति तद्वदुपजीवनीयो
15 भवतीत्युक्तम्। इह तु धनवदिति विशेष इति॥

**12. यो ह वै साम्नः प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च। वाग्वाव साम्नः प्रतिष्ठा। यद्वेतद्वागित्यृगेव सा। ऋचि साम प्रतिष्ठितम्॥ ४ ॥**

19 सा - अथान्यत्साम्नो ध्यातव्यं स्वरूपमाह-यो हेति। यः उद्गाता साम्नः

---

1. BMS. स्वं ह्य स्वर्णं (B. adds च after स्वर्णं), T. स्वर्जह्य स्वर्णं, My. स्वर्ग्यं सुवर्णं for स्वं यः सुवर्णं.
2. BMyMST. स्वर्णं for first सुवर्णं
3. PA. om. साम्नः; AB. स्व for स्वत्व.
4. P. adds उद्गाता after first यः; PB. om. च; P. om. शोभनo ......oभवतीत्यर्थः. and B. द्रव्यस्य for तद्द्वयस्य.
6. P. om. साम्नः स्वं सुवर्णं च.
7. A. क्रुष्टादिभिः सप्तभिः नवस्वरः' Bl. B. क्रुष्टादिसप्तभिन्नस्वरः for क्रुष्टादि ..स्वरः. and P. सारिष्ठं सामस्वरूपम् for स्वराधीनत्वात् सामस्वरूपस्य; Bl. P. om. सः.
9. RAl. ज्ञातव्यं विवक्ष for ज्ञातव्यo; R. प्रचोदयति for प्ररोचयति.
14. RAl. उपजीवजीवनीयः for second उपजीवनीयः.
17. ABMSTS. यद्वैतद् for यद्वेतद्.
19. Bl. AB. गातव्यस्वo for ध्यातव्यं स्वo; Bl. उच्छ्रितां for उद्गाता.

प्रतिष्ठाम् आस्पदं स्वकर्माश्रयं वेद साक्षात् स उद्गाता प्रति ह तिष्ठति प्रतिष्ठितः खलु। कुत्रेति तदुच्यते-अस्मिंश्च लोके भुवि। अमुष्मिंश्च लोके स्वर्गे। उभयत्र परस्परापेक्षश्चशब्दः। इह जीवन् पश्वादिभिः प्रतिष्ठितो भवति; देहान्ते स्वर्गे संकल्पसिद्धैर्भोगैरित्यर्थः। साम्नः का प्रतिष्ठेति चेत्, उच्यते--वाग्वाव वागेव साम्नः प्रतिष्ठा। अत्र वाक्शब्दस्य ऋक्परतामाह-यद्वेतदिति। 'यदु उ एतत्' इति पदच्छेदः। 5
उ-शब्द एवकारार्थे। वागेवेति यदेतदस्ति, सा ऋगेव। अत्र ऋचोऽतिरिक्तस्य अन्यस्य वचसो वा इन्द्रियस्य वा अप्रयोजनत्वादिति। तावदृगाश्रयत्वमाह-ऋचि गायत्र्यादिच्छन्दोबद्धायां साम गीत्यात्मकं रथन्तरादि प्रतिष्ठितम्॥ ४॥

भ - अथान्यदपि वेदनीयमस्तीति सप्ररोचनमाह--यो हेति। हेति विनिग्रहार्थः। वै एवकारेण समानार्थः। साम्नः प्रतिष्ठाज्ञानात् प्रतितिष्ठत्ये- 10
वोभयोर्लोकयोः। इह लोके यश्च चिरं प्रतिष्ठाय अमुष्मिंश्च देहान्ते प्रतितिष्ठतीति। का साम्नः प्रतिष्ठा यां विद्वान् प्रतितिष्ठतीति तां दर्शयति -वग्वाव साम्नः प्रतिष्ठा। किं पुनरिह वागुच्यते? किं शब्दमात्रम्, उत शब्दविशेषः? अथ वागिन्द्रियमिति शब्दविशेष इत्याह--यद्वेतद्वागित्यृगेव सा। "यत् उ एतत्" इति पदच्छेदः। यत् खल्वेतद् वागित्युक्तं वस्तु सा ऋगेवेति। कारणमाह--ऋचि साम प्रतिष्ठितम्। ऋचि हि साम प्रतिष्ठितम्॥ 15

**13. स यदा गायत्रं बृहत्यां गायति; बार्हतं जगत्याम्; जागतं त्रिष्टुभि; समतां चापद्यते। तस्मादेतत् सामेत्याह। समा उ ह वाअस्मि ंश्छन्दांसि साम्यादिति तत्साम्नः सामत्वम्॥**

सा - अथ निर्वचनेन साम प्रशंसति-स यदेति। सः उद्गाता यदा यस्मिन् 19

1. P. om. साक्षात्; AB. om. उद्गाता, Bl. विद्वान for स उद्गाता.
4. A. सम्नां for साम्नः.and Bl. च for चेत्; Bl. P. om. वागेव.
5. A. यच्चैतत्, B. यद्वैतद् for यद्वेतद्
6. B. ऋगेवेति for ऋगेव; Bl. B. ऋग्व्यति for ऋचोऽति
7. AB. वचसो ग्रन्थिरिन्द्रियस्य चाप्रयोजकत्वात् Bl. वचसो ग्रन्थेन्द्रियस्य वाप्रयोजकत्वात् for वचसो वा०....अप्रयोजनत्वात्.
10. वै see CN.
11. RAl. तिरं for चिरं
12. का साम्नः..see CN.
14. Al. ऋगेवेति for ऋगेव सा and Al. om. 'यत्. . . .०ऋऽगेवेति.
16. MyMTAS. यथा for यदा
17. My. समन्तद्वापद्यते, B. सामतां चा० for समातां चा० and My. साममाहुर्वा for समा उ ह वा
18. MTS. साम्न्यात् for साम्यात्. Sayana adapts साम्न्यात्
19. Bl. B. गाता for उद्गाता

प्रयोगकाले गायत्रं गायत्रीच्छन्दस्कायामृच्युत्पन्नं साम बृहत्यां बृहतीच्छन्दस्कायामृचि गायति तदा समतामापद्यते इति संबन्धः। तथा हि-"अश्वं न त्वा"-(सामo i. 17) इत्येतस्यां गायत्र्यामृच्युत्पन्नं वारवन्तीयसंज्ञकं गायत्रं साम, "अभि त्वा शूर नोनुमः"-(सामo i. 233) इत्येतस्यां बृहत्यां गीयमानं सत् समतामापद्यते। न्यूनच्छन्दस्कायां
5 गीयमानं परिमितं साम अधिकच्छन्दस्कायां गीयमानमपि परिमितमेव भवति। नाक्षरस्वरस्तोभविकारैरतिरिक्तं भवति। एवमुत्तरेष्वपि योज्यम्। तथा बृहत्यां "पुनानः सोम" --(सामo i. 511) इत्यस्यामुत्पन्नं बार्हतं साम जगत्यां जगतीच्छन्दस्कासु "यज्ञायज्ञा" (सामo i. 35) "अभिप्रियाणि" (सामo i. 554) "वृषा मतीनाम्" (सामo i. 559) इत्यादिषु गीयमानं समतामापद्यते। तथा जागतं "प्रक्षस्य वृष्णः" (सामo iii.
10 603) इत्यस्यां जगत्यामुत्पन्नं "मूर्धानं दिवः"-(सामo i. 67) इत्यादिषु त्रिष्टुप्छन्दस्कासु गीयमानं समतामापद्यते। यस्मादेवं तस्माद् गीत्यात्मिकामृचं सामेत्याह ब्रूते विद्वज्जनः। न केवलमस्य बहूनां छन्दसां समत्वात् सामत्वम्; अपि तु अस्मिन्, जातावेकवचनम्, एषु बहुषु सामसु रथन्तरादिषु प्रत्येकं छन्दांसि गायत्र्यादीनि समा उ ह वै। उ इत्यवधारणे। ह वा इति प्रसिद्धौ। समान्येव खलु। तत्रोपपत्तिमाह-सान्यादिति।
15 सामान्यशब्दातन्न् समशब्दसमानार्थात्-मकारस्य दीर्घलोपः। दीर्घलोपे साम्न्यमिति भवति। यद्वा समानाम्नातत्वं साम्न्यम्। आम्नाय इत्याम्नम्। समानं च तदाम्नं चेति समानाम्नम्। "समानस्य छन्दसि-" (पा. 6.3.84) इत्यादिना समानशब्दस्य सत्वे कृते साम्नमिति
18 भवति। तस्यभावः साम्न्यम्, तस्मात् साम्न्यात्, समानाम्नातत्वादित्यर्थः। बहूनां हि

4. Bl. P. om. बृहत्यां
5. PAB. om. गीयमानं Bl. B. अपरिमितं for परिo.
7. P. adds ऋक्षु after oच्छन्दस्कासु.
9. P. adds सत् and Bl. साम after गीयमानं.
10. P. एतस्यां for अस्यां.
11. B. सामताम् for समताम्, PBl. गीत्यात्मिकासु सामo for गीत्याo
12. P. om. अस्य. Bl. adds इति after अस्मिन्
13. B.एषां for एषु.and A. om. second उ.
14. A. om. ह AB. Bl. सामानि for समानि
15. P. समानशब्दः समशब्दसमानार्थः। अकारदीर्घलोपे साम्न्यादिति for सामान्यo . . . साम्न्यमिति भवति। Bl. आङ्कारस्य for मकारस्य.
16. BBl. साम्यम् for साम्न्यम्. AB. Bl. समानत्वं साम्यं for समानाम्नातत्वं साम्न्यम्. P. om. अम्नाय इत्याम्नम्. and Bl. आम्नातं for first आम्नम्
17. P. समानस्य for समानo.
18. Bl. साम्यम् for साम्न्यम्. A. साम्यात् B. समानात् Bl. सामान्यात् for साम्न्यात्; Bl. (आ) म्नत्वाद् for (आ) म्नातत्वाद्.

साम्नां सामनमेकं छन्द आम्नायते। तत् तस्मात् समानायामृचि बहूनि सामानि गीयन्ते। तस्मादपि साम्नः सामत्वं संपन्नमिति।

भ - समत्वात् सामेति संग्रहेणार्थः। बहूनां छन्दसां समत्वा[त्] साधारणत्वात् समानायामृचि बहूनां साम्नां गीयमानत्वा[त्] वा सामेति। साम्नः तावत् समत्वं दर्शयति-[स] सामगानं कुर्वन् यदा गायत्र्यामुत्पन्नं साम बृहत्यां गायति, यथा 5 वारवन्तीयम् "अभि त्वा शूर नोनुमः" इति बृहत्याम्। यथा वाथर्वणं "पुनानः सोम धारय" इति बार्हतं बृहत्यामुत्पन्नं जगत्यां गायति; यथा "यज्ञायज्ञा", "अभिप्रियाणि", "वृषामतीनाम्" इत्यादिषु; जागतं जगत्यां "प्रक्षस्य वृष्णः" इत्यस्यामुत्पन्नं "मूर्द्धानं दिव" इति त्रिष्टुभि गायति तदा समतामापद्यते स्तोभतो विकाराच्च। तस्मादेतत् सामेत्याह श्रोत्रिय [श्चाख्या] ति। समा समानि छन्दांसि, उ ह वै इति त्रयो वाक्यालङ्कर्याः, 10 अस्मिन् साम्नीति जातावेकवचनम्। कथं छन्दसां साम्नि समत्वमित्यत्राह-साम्यादिति। बहूनां साम्नामेकं छन्दः सममाम्नायते। बहुसामानि छन्दांसि हि। साम्नां समानत्वे छन्दोबहूनां साम्नः गीयमानत्वाच्च सामशब्दप्रवृत्तिरिति॥

**14. क्रुष्टः प्राजापत्यो ब्राह्मो वा वैश्वदेवो वादित्यानां प्रथमः साध्यानां द्वितीयोऽग्नेस्तृतीयोवायोश्चतुर्थः सौमो मन्द्रो 15 मित्रावरुणयोरतिस्वार्यः ॥ ५ ॥**

सा - अथ क्रुष्टादिसप्तस्वराणां क्रमेण देवता आह-क्रुष्ट इति। यः क्रुष्टाख्य उत्तमः स्वरोऽस्ति तस्य प्रजापतिर्ब्रह्मा विश्वेदेवास्त्रयो विकल्पेन देवताः। प्रजापतिर्विराट्। ब्रह्मा हिरण्यगर्भ इति विवेकः। शिष्टो निगदव्याख्यातः। मन्द्रः अवरेषां 19

1. P. om. तत् and reads यस्मात् for तस्मात्.
2. P. adds तत् before तस्मात्.
3. बहूनां See CN.
5. RAl o गानां. for oगानं.
7. RAl. यज्ञा यज्ञीयम् for यज्ञायज्ञा.
8. R. प्रक्षस्य वृष्ण्या, Al. प्रज्ञस्य वृष्णः for प्रक्षस्व. . . .RAl. add भास after उत्पन्नं.
10. श्रोत्रियः See CN. R. सामानि for समानि.
11. जातावेकवचनम् R. See CN.
12. RAl. समसाम्नायते for समाम्नायते; साम्नां See CN.
15. RAl. सोमः for सौमः
18. P. oदेवा वा त्रयः for oदेवास्त्रयः.
19. B.Bl. शिष्टं स्पष्टम्, A. श्लिष्टे. . . for शिष्टो निo.

मध्ये पञ्चमः स्वरः। अतिस्वार्यः षष्ठः॥ ५ ॥

भ - अथ क्रुष्टादीनां सप्तानां नानादेवत्येष्वपि सामसु साधरणीर्देवता आह-क्रुष्ट इति। अवरेषां पञ्चमो मन्द्रसंज्ञः स सोमदेवत्यः। इतरत् स्ववगतम्। एताः स्वराभिमानिन्यो देवतास्त्वन्यास्तु ऋक्रागातावत्! । (ऋग्वाग्देवतावत्?)यथा
5 रथन्तरस्य स्वरो न निन्द्र (!) इति ॥ ५ ॥

**15. ते देवाः प्रजापतिमुपाधावन्। तेऽब्रुवन् "कथं नु वयꣳ स्वर्गं लोकमियाम" इति। तेभ्य एतान् यज्ञक्रतून् प्रायच्छत् "एतैः लोकमेष्यथ" इति। तैः स्वर्गं लोकमायन्॥**

सा - अथ यज्ञानधिकारिणां द्विजातीनां स्वर्गादिफलाय सामाध्ययनं
10 विधित्सुस्तदधिकारिणां स्वर्गफलाय प्रजापतिर्यज्ञक्रतून् प्रायच्छदित्याह-ते देवा इति। "स वा इदं विश्वं भूतमसृजत" (सा. ब्रा. I. 1.6) इत्युक्तेषु देवादिभूतजातेषु मध्ये ते देवाः केचिद्देवतात्मकाः स्वर्गाख्यसुखविशेषोपायज्ञानार्थं प्रजापतिं स्वपितरम् उपाधावन् अभिप्राप्ताः। तेभ्यः स्वर्गसाधनत्वेन एतान् प्रौढब्राह्मणषड्विंशयोरभिहितान् एकाहाहीनसत्रात्मकान् यज्ञक्रतून् यज्ञकर्माणि प्रायच्छत्। ते तैः स्वर्गं प्राप्ताः।
15 सुबोधमन्यत्॥

भ - इत्येवं बहुधास्तुतसामयज्ञसाधनफलकामानां विधित्सुश्चाधिकारिणि प्रस्तावार्थमाह-ते देवा इति। ते सृष्टेषु तेषु केचिद्देवात्मकाः। एतान् पूर्वोक्तान् यज्ञक्रतून् यज्ञात्मकानि कर्माणि। सुज्ञातमितरदिति॥

**16. स्वर्गं लोकमेति य एवं वेद॥ ६ ॥**

20 सा - अथोक्तवेदनाफलमाह--स्वर्गमिति। स्पष्टोऽर्थः ॥ ६ ॥

---

1. A. पञ्चमस्वरः अतिस्वार्यान्तः। अर्थः स्पष्टः for पञ्चमः.....षष्ठः॥
3. RAl. oसंज्ञत्स सोमः देo for संज्ञः...., Al. सुज्ञातम्. for स्ववगतम्.
4. देवताः See CN.
6. My. om. तेऽब्रुवन्.
7. & 8 My. स्वर्ग्यं for स्वर्गं.
9. A. B. देवादीनां for द्विजातीनां.
11. A. B. देवादिषु for देवादिo
14. B.. एतैः for ते तैः.
17. सष्टेषु See CN.
20. Bl. वेदितुः for उक्तवेदना.

भ - कामोऽय [मेकाहा] हीन [सत्रात्मका] यज्ञक्रतवः स्वर्गसाधना इति विद्वान् स्तौति-स्वर्गं लोकमिति॥ ६ ॥

**17. तेषामहीयन्ताजाः पृश्नयो वैखानसा वसुरोचिषो ये चापूता ये च कामेप्सवस्तेऽब्रुवन् "कथं नु वयं स्वर्गं लोकमियाम"इति। तेभ्य एतत् स्वाध्यायाध्ययनं प्रायच्छत्, तपश्चैताभ्याꣳस्वर्गं लोकमेष्यथेति। ताभ्यां स्वर्गं लोकमायन्॥** 5

सा - इदानीं यज्ञानधिकारिणां फलाय साम, स्वाध्यायाध्ययनं, तपश्च प्रायच्छदित्याह- तेषामिति। तेषां प्रजापतिसृष्टानां मध्ये केचन देवव्यतिरिक्ता अजपृश्न्यादयः अहीयन्त यागानधिकारेण स्वर्गफलहीना अभवन्। अजादयः ऋषिगणाः। वैखानसाः केचन शतसंख्याका मन्त्रंदृशः। तथा ये चापूताः 10 यागसधनाध्ययनादिजन्यशुद्धिरहिताः। ये च कामेप्सवः शुद्धा अपि तुच्छभूतैहिकफलैकतत्परा उक्तव्यतिरिक्ताः, यज्ञाधिकारेण हीनाः अभवन्, ते सर्वे प्रजापतिं कथं नु इदानीं स्वर्गमियामेत्यब्रुवन्। स चोक्तः प्रजापतिः तेभ्यः अजादिभ्यः स्वाध्यायाध्ययनं तपश्च दत्त्वा एताभ्यां स्वर्गं लोकमेष्यथेत्यब्रवीत्। ते च ताभ्यां स्वर्गं लोकमायन्॥ 15

भ - अथ यज्ञेऽप्यनधिकारिणो दर्शयितुमाह-तेषामिति। तेषां प्रजापतिसृष्टानां भूतानां मध्ये अहीयन्त यज्ञाधिकारात् यज्ञफलाद्वा स्वर्गात्। अजाः पृश्नय इत्यादयः पूर्वे ऋषिगणाः। वैखनसा नाम केचिन्मुनयः शतसंख्याः, वसुरोचिषो नाम सहस्रसंख्याः। ये चापूता अन्ये पूर्वोक्तेभ्यः, ये च कामेप्सवः यज्ञानुष्ठायिनां मध्ये अभिसंहितक्षुद्रफलास्ते वाहीयन्त स्वर्गसाधनेभ्यो यज्ञेभ्य इति। तेऽब्रुवन् "कथं नु 20

---

1. R. om. this sentence. Al. कामोऽयमघहीनाः for कामो….
3. MTA. प्रश्नयः for पृश्नयः.
7. P. महाफलाय for फलाय; A. सामस्वाध्यायाध्ययने for साम स्वा०.
8. A Bl. प्रायश्चित्तम् for प्रायच्छत्.
9. A खङ्ग०, P. खलु for अज; A. ०फलतो हीनाः, Bl. फलता . . . .for फलहीनाः.
11. Bl. AB. om. जन्य.
12. P. तु कृतैहिकफलैकतत्पराः AB. तुच्छभूतैः क्रतुफलैक० for तुच्छ . . . .।
13. AB. Bl. om. नु.
17. RAl. add यं after अहीयन्त.and RAl. अज्ञाः for अजाः.
20. RAl. तेषु(ष Al) वत् for तेऽब्रुवन्.

वयं स्वर्गं लोकमियाम" इत्यादिरनुवाकशेषो निगदसिद्धः। तत्रापूतानां तथा इतरेषामुभयमपीति द्रष्टव्यम्॥

**18. स्वर्गं लोकमेति य एवं वेद य एवं वेद॥ ७ ॥**

सा - अथ वेदितुः फलमाह-स्वर्गमिति। स्पष्टोऽर्थः। य एवं वेदेत्यभ्यासः
5 खण्डसमाप्त्यर्थः॥ ७ ॥ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये प्रथमः खण्डः॥ ७ ॥ ॥ १ ॥

भ - स्वर्गमिति। द्विरुक्तयोऽर्थसमाप्तिद्योतिका इति॥

9 ॥ इति प्रथमोऽनुवाकः ॥

1. RAl. oशेषा for oशेषो; AL. oसिद्धिः for oसिद्धः.
4. A. repeats यं एवं वेद.
6. P. (इ) ति खण्डसमाप्त्यर्थमभ्यासः for (इ)त्यभ्यासः. . . . Bl. om. य एवं वेदेति and reads खण्डसमाप्त्यर्थोऽभ्यासः।

# द्वितीयः खण्डः 1

## 1. अथातस्त्रीन् कृच्छ्रान् व्याख्यास्यामः ।।१।।

सा - प्रथमखण्डे प्रजापतिः कृत्स्नं जगत् सृष्ट्वा तस्योपजीवनाय साम, स्वर्गप्राप्त्युपायत्वेन यज्ञक्रतूंश्च प्रादात्। तत्र देवास्तथा स्वर्गं लोकमगमन्। तेषां मध्ये अजाः पृश्नय इत्यादीनां स्वर्गं प्राप्तुमशक्तानां स्वाध्यायाध्ययनं तपश्च 5 प्रादादित्युक्तम्। तत्र स्वाध्यायाध्ययनम् उत्तरत्र विधास्यते। इह तु तपो विधातुमादौ प्रतिजानीते-अथेति। अथशप्दोऽत्रानन्तर्ये वर्तते। अथ अनन्तरम्। अतःशब्दो हेतुवचनः। यतोऽपूतानां यज्ञाद्यशक्तानां च कृच्छ्रादिलक्षणतपोभिर्विना शुद्ध्यभावात् न स्वर्गप्राप्तिः, अतः इत्यर्थः। त्रीन् कृच्छ्रान् कृच्छ्रातिकृच्छ्रकृच्छ्रातिकृच्छ्रभेदेन त्रिविधान् तपोविशेषान् व्याख्यास्यामः। विविच्य आसमन्तात् कथयिष्याम इत्येवं प्रतिज्ञा।। १ ।। 10

भ - तपो नैकविधम्। तत्र वक्ष्यते प्रथमं तावत् कृच्छ्रोऽतिकृच्छ्रः कृच्छ्राति-कृच्छ्र इति त्रीणि तपांसि चतुष्टयं नेति प्रतिजानीते-अथात इति। अथ अनन्तरं यज्ञक्रतूनां व्याख्यानात्। ततः यतः कृच्छ्राधीना शुद्धिरपूतानां तस्मात् त्रीन् कृच्छ्रान् कृच्छ्रसंज्ञान् तपोविशेषान् व्याख्यास्यामः। विविधं(च्य?) प्रब्रूम इति ब्राह्मणां(णं) सम्नाडितो (सामान्यतो?)वाक्यम्। अथवा चापूता इत्युक्तं परामृश्यते 15 उक्ताद्यज्ञकल्पादनन्तरमिति।। १ ।।

## 2. हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयात्। 17

---

3. B. प्रथमाध्याये for प्रथमखण्डे.
4. ABl. आयन् for अगमन्; P. Bl. om. लोकं. and P. Bl. तेषु for तेषां.
7. AB. om. अथ अनन्तरम्।
8. AB. (अ)व्रतानां P. (अ)जपृग्नीनां for(अ)पूतानां. and A. ०लक्षणं तपोऽतीव विध्यभावन्न स्वर्ग०; B. ०लक्षणं तपो विना-धीन्त स्वर्ग० for लक्षणतपोभिः. . .स्वर्ग०.; Bl. अधिकाराभावात् for शुद्ध्यभावात्.
10. AB. कथयामः for कथयिष्यामः AB. प्रतिज्ञाता for प्रतिज्ञा.
12. R. चतुतयन्त, Al. चतुतयन्तु for चतुष्टयं.
14. विविधं see CN.
15. चापूताः see CN.

सा - अथ कृच्छ्रस्वरूपं तावद्विधत्ते-हविष्यानिति। तिस्रो रात्रीः, अत्र रात्रिशब्दस्तत्प्रतियोगिकमहरपि लक्षयति। त्रीनहोरात्रानित्यर्थः। नाश्नीयात् न भुञ्जीत। त्रिष्वहोरात्रेषु भोजनं न कुर्यादित्यर्थः। किं कृत्वा? प्रातराशान् प्रातःशब्दोऽत्राहर्लक्षकः। प्रातरश्यन्ते भुज्यन्ते इति प्रातराशाः, तादृशान्, हविष्यान्
5 हविषि योग्यान्, क्षारलवणादिवर्जितान् भुक्त्वा दिनत्रयेऽपि अहनि सकृदेव भुक्त्वा रात्रौ नाश्नीयादित्यर्थः॥

भ - कृच्छ्रान् तावदाह- हविष्यानिति। आदौ तिस्रो रात्रीः त्रीण्यहोरात्राणीत्यर्थः। हविषे योग्यान् क्षारलवणवर्जितान् प्रातराशान्, शब्दादिलक्षणार्थः प्रातः अहनि अश्यन्ते भुज्यन्ते इति प्रातराशाः, तान् हविष्यान् भुक्त्वा ततो नाश्नीयात्। दिवैव
10 सकृदश्नीयादित्यर्थः॥

**3. अथापरं त्र्यहं नक्तं भुञ्जीत।**

सा - एवं द्वादशरात्रिदिवससाध्ये कृच्छ्रे प्रथमदिनत्रयनियममुक्त्वा द्वितीयदिनत्रयनियममाह--अथेति। अथ प्रथमत्र्यहनियमानन्तरम् अपरं त्र्यहं अपरेषु द्वितीयदिनत्रयेषु नक्तं रात्रौ भुञ्जीत अश्नीयात्। हविष्यमिति शेषः॥

15 भ - अथापरं त्र्यहं नक्तमेव भुञ्जीत नाहनि॥

**4. अथापरं त्र्यहं न कंचन याचेत्।**

सा-अथ तृतीयदिनत्रयनियमं विधत्ते--अथेति। अथ द्वितीयत्र्यहनियमानन्तरम् अपरं त्र्यहम् अपरेषु तृतीयदिनत्रयेषु न कंचन कमप्यात्मीयमन्यं वा पुरुषं भोजनार्थं
19 याचेत्। अयाचितं यद्यागच्छेत् तर्हि हविष्यं भुञ्जीतेस्यर्थः॥

---

2. AB. Bl. शब्देन for शब्दः; Bl. अहोरात्रम् for अहः; A. अभि for अपि; P. om. अपि.
3. AB. Bl. add. इत्यर्थः after भुञ्जीत; AB. Bl. om. इत्यर्थः.
5. Bl. योज्यान् for योग्यान्.and P. om. अपि.
8. Al. हविषः, R हविष्ये for हविषे.
9. Al. R. अजिश्यन्ते भुञ्जीत इति for अश्यन्ते. . .
12. B. om. रात्रि; P. कृच्छ्रव्रते for कृच्छ्रे.
13. P. oत्रये for त्रयo; P. विधत्ते for आह, P. परेषु for अपरेषु .
14. P; हविरिति for हविष्यमिति.
17. ABBl. om. नियमं.
18. Bl. om. पुरुषं.
19. P. भुञ्जेत् for भुञ्जीत.

भ - अथापरं त्र्यहं न कञ्चन आत्मीयम् [अन्यं] वा याचेदशनीयम्। यदि किञ्चित् स्वय [म]याचितं लब्धमशनं हविष्यं तदश्नीयात्। अलाभे अर्थादनशनमिति सिध्यति॥

**5. अथापरं त्र्यहमुपवसेत्।**

सा - अथ चतुर्थदिनत्रयनियमं विधत्ते-अथेति। अथअनन्तरम् अपरेषु 5
चतुर्थदिनत्रयेषु नाश्नीयादित्यर्थः। एतत् कृच्छ्रस्वरूपमुच्यते। तथा चास्योक्तं लक्षणम्-

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परं च नाश्नीयात् प्राजापत्यं चरन् द्विजः॥"

(म० स्मृ. ११. २११.)

इति॥ 10

भ - अपरं त्र्यहमुपवसेत्। उपवासोऽनशनमिति॥

**6. तिष्ठेदहनि रात्रावासीत क्षिप्रकामः।**

सा - अथ कृच्छ्रादिफलभूतशुचित्वादेः क्षिप्रकारित्वं कामयमानस्य नियमविशेषं विधत्ते-तिष्ठेदिति। क्षिप्रकामः विहितशुचित्वादिफलं शीघ्रं मे स्यादिति कामयमानः अहनि दिवा तिष्ठेत् उत्थितो भवेत्। नासनशयनादिकं कुर्यादित्यर्थः। तथा 15
रात्रावासीत उपविशेन्न शयनोत्थाने कुर्यादित्यर्थः॥

भ - इत्यनशननियममुक्त्वा अथ व्रत[नियमा]नाह-तिष्ठेदहनीत्यादिना। क्षिप्रकामस्य तावद्विशेषमाह- तिष्ठेदिति। क्षिप्र[म]विलम्बेन फलं भूयादिति कामयमानः। किमिदं क्षिप्रत्वं नाम? वक्ष्यमाणस्य शुचित्वादेः उतप्रकृतस्य? शुचित्वादिसाधनस्य कृच्छस्य फलानामपि कृच्छ्रादयः क्वचित् क्वचिद्विधीयन्ते। तेषामिदं 20
प्रासङ्गिकं वचनम्॥

**7. सत्यं वदेत्। अनार्यैर्न संभाषेत। रौरवयौधाजये नित्यं प्रयुञ्जीत। अनुसवनमुदकोपस्पर्शनमापोहिष्ठीयाभिः॥** 23

1. RAl. यावत् for याचेत्.
2. लब्धम् See CN. and RAl. अर्थानदर्शनम् for अर्थादनशनम्.
4. My. उपवसन् for उपवसेत्.
6. P. om. उच्यते. and AB. om. च्च Bl. om. अस्य.
13. P. शुचित्वे कृच्छ्रत्वं कामयमानस्य for शुचित्वादेः......
16. Bl. (उ)त्थानं for (उ) त्थाने.
17. RAl. नियमरुक्तोथव्रता (Al. निव्रता)न्याह for नियमम्. . . .

अथोदकतर्पणम्। नमोऽहमाय मोहमाय मꣳहमाय धून्वते तापसाय पुनर्वसवे नमो नमः। मौञ्ज्यायौर्म्याय सौम्याय शम्याय शिवाय नमो नमः। पाराय सुपाराय महापाराय पारदाय पारविन्दाय नमो नमः। पुरुषाय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय
5 ब्रह्मचारिणे नमो नमः। इति। एतदेवादित्योपस्थानम्। एता एवाज्याहुतयः। द्वादशरात्रस्यान्ते स्थालीपाकꣳश्रपयित्वैताभ्यो देवताभ्यो जुहुयात्। अग्नये स्वाहा। सोमाय स्वाहा। अग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतयेऽग्नये स्विष्टकृत इति। अथो ब्राह्मणतर्पणम्॥ २ ॥

10 सा - अथ कृच्छ्रादिकर्तुः सत्यं वदेदित्यारभ्य ब्राह्मणतर्पणमित्यन्तेन वाक्यजातेन व्रताङ्गभूतान् नियमविशेषानाह- सत्यमिति। व्रतकर्ता यदा वचनं ब्रूयात्तदा सत्यं यथार्थमेव ब्रूयात्। न व्रतकाले असत्यं वदेदित्यर्थः। "नानृतात् पातकं किञ्चित्" -इति स्मृतावनृतस्यातिनिन्दितत्वात्। अनार्यैः वेदशास्त्राधिकारिणो ब्राह्मणादित्रैवर्णिका आर्याः, तद्व्यतिरिक्ता अनार्याः शूद्रपतितादयः। तैः सह न संभाषेत सत्यमनृतं वा न
15 किञ्चित् संभाषणं कुर्यात्। रौरवयौधाजये (SV. i. 6.1.3.1) एतन्नामनी "पुनानः सोम धारया (साम. i. 511)" इत्यस्यामृच्युत्पन्ने द्वे सामनी नित्यम् अनुदिनं प्रयुञ्जीत। त्रिवारादन्यूनं यथा भवति तथा गायेदित्यर्थः। अनुसवनं सवने सवने प्रातरादिषु त्रिष्वपि सवनेष्वित्यर्थः। आपोहिष्ठीयाभिः आपोहिष्ठेतिशब्दयुक्ताभिस्तिसृभिः ऋग्भिः उदकोपस्पर्शनं जलावगाहनं स्नानं कुर्यादिति शेषः॥

अथ उदकस्पर्शनानन्तरं वक्ष्यमाणैश्चतुर्भिर्मन्त्रैः उदकतर्पणम् उदकेन तर्पणं
21 कुर्यात्॥

---

6. PB. om. एवं; My. adds चारु before स्थालीo
9. AB. अतो for अथो.
11. A. व्रताङ्गवर्गादि B. व्रताङ्गवागादि for व्रताङ्गभूतान् P. om. विशेषान्.
12. P. व्रतकाले नानृतं वदेत् for न व्रत. . . . .
13. Bl. B. om. अति.
15. Bl. adds इति before एतन्नामनी.
16. P. adds ते after सामनी.
17. P. त्रिवारं गानं यथा, B. Bl. त्रिवारादवरं यथा for त्रिवाराद्. . .
18. Bl. P. om. अपि; B. oष्ठीयादिभिः for oष्ठीयाभिः.and Bl. B. oष्ठाशब्दo for o ष्ठेतिशब्दo

तत्र प्रथममन्त्रमाह- नमोऽहमायेति। यद्यप्यत्र देवताविशेषः स्पष्टो न प्रतीयते, तथाप्येतदादीनां चतुर्णां मन्त्राणामेवोत्तरत्रादित्योपस्थाने अतिदिश्यमानत्वादेष्वप्यादित्याभिमानी परमेश्वरः प्रतिपाद्यत इति गम्यते। अहमाय अहमहंकारः तेन माति निर्माति कृत्स्नं जगदित्यहमः परमेश्वरः। अनुस्वाराभावश्छान्दसः। तस्मै नमः करोमीति शेषः। यद्वा "माङ्माने शब्दे च"। अहमिति मीयते शब्द्यते सर्वैर्मनुष्यैरित्यहमः परमेश्वरः। 5 अहंशब्दवाच्य इत्यर्थः। सर्वे हि जनाः कस्त्वमिति पृष्टा अहमहमिति स्वात्मानं कथयन्ति। तादृशाय नमः। मोहमाय मोहो वैचित्र्यमज्ञानं तेन मातीति मोहमः तस्मै नम इति सर्वत्रानुषज्यते। मऽहमाय मंहनीयं स्तुत्यं यथा भवति तथा कृत्स्नं निर्मातीति मंहमः। अथवा मंहतिर्दानकर्मा। स्वभक्तेभ्यो दानं माति ददातीति मंहमस्तस्मै नमः। धून्वते स्वभक्तानां पापं विधून्वन् परिहर्ता परमेश्वरः। तस्मै नमः। तापसाय 10 तपस्विवेषधराय नमः। तपस्विने इत्यर्थः। यद्वा, तप एव तापसं तपोरूपाय नम इत्यर्थः। पुनर्वसवे पुनर्वासयति स्वरश्मिभिः कृत्स्नं जगदिति पुनर्वसुः सूर्यात्मा परमेश्वरः। तस्मै नमः॥

अथ द्वितीयं मन्त्रमाह-मोञ्ज्यायेति। मौञ्ज्याय मुञ्जविकारो मौञ्जस्तदर्हाय नमः। और्म्याय ऊर्मिरुदकं तदर्हाय नमः। स्नानार्थं जलावगाहिन इत्यर्थः। सौम्याय 15 रमणीयाय नमः। शम्याय शमीति कर्मनाम। तदर्हाय नमः। सृष्ट्यादिव्यापारयोग्यायेत्यर्थः। शिवाय मङ्गलस्वरूपाय परमेश्वराय नमः॥

अथ तृतीयमन्त्रमाह-पारायेति। पाराय कर्मणां समापकाय नमः। सुपाराय सुष्टुकर्मसमापकाय नमः। तथा महापाराय अत्यन्तमाधिक्येन कर्मसमापकाय नमः। सुमहच्छब्दयोः कर्मसमाप्तितारतम्यभेदेन भेदोऽवगन्तव्यः। 20

1. AB. स्पष्टं for स्पष्टः.
3. & 4. AB. तत् Bl. तम् for तेन; A. अहः for अहमः.
5. P. अहमिति यः शब्द्यते for अहामिति मीयते शब्द्यते; Bl. अहम्. for अहमः.
6. AB. पृष्ट्वा for पृष्टाः.
7. Bl. तम् for तेन; B. मोहः for मोहमः.
8. A. कृच्छ्रं for कृत्स्नं.
9. Bl. om. ददातीति मंहमः.
11. A. तापस for तपस्वि; Bl. om. तपस्विने.
15. P. उदकं स्नानार्थं जलावगाहनमित्यर्थः, तदर्हाय नमः। for उदकं....। स्नानार्थं...इत्यर्थः.
17. P. oरूपिणे, A. oरूपाय for oस्वरूपाय.
18. P. adds इति after नमः.
20. A. adds सकलo before first कर्मo; Bl. om. सुमहच्छब्दयोः...पारतारतम्यभेदेन; AB. om. second कर्म; Bl. द्रष्टव्यः for (अ)वगन्तव्यः.

यद्वा, पारमिति परं तीरमुच्यते। संसाराब्धेः पारभूताय प्रपञ्चातीतस्वरूपायेत्यर्थः। अस्मिन्नप्यर्थे पारतारतम्यभेदेन सुमहच्छब्दयोः भेदो द्रष्टव्यः। पारदाय उक्तः पारशब्दार्थः। तस्य दात्रे नमः। पारविन्दाय तथाविधपारं लब्धवते नमः॥

अथ चतुर्थमन्त्रमाह-पुरुषायेति। पुरुषाय पुरि हृदयपुण्डरीके शेत इति वा
5 पूर्णत्वाद्वा पुरुषः परमेश्वरः। तस्मै नमः। सुपुरुषाय शोभनपुरुषाय नमः। महापुरुषाय महांश्चासौ पुरुषो महापुरुषः। तस्मै नमः। स्तुत्यैः गुणैः प्रवृद्धायेत्यर्थः। मध्यमपुरुषाय नमः। पुरुषस्त्रिविधः- अवरमध्यमोत्तमभेदेन। अवरो मनुष्यादिः। मध्यमो देवादिः। उत्तमस्तत्कारणभूतः परमेश्वरः। तत्र पुरुष इत्यनेन मनुष्यादिरूपः। तस्मै नमः। उत्तमपुरुषाय उक्तयोः कारणभूताय परमात्मने नमः। यद्वा, विराड्हिरण्यगर्भ-
10 परमात्मभेदेन पुरुषस्यावरमध्यमोत्तमत्वमवगन्तव्यम्। ब्रह्मचारिणे नम इति। ब्रह्म वेदः तत्र चरति गच्छतीति ब्रह्मचारी। तस्मै नमः। वेदाधिगम्यायेत्यर्थः। "तं त्वौपनिषदं पुरुषं पृच्छामि"(श. ब्रा. 14. 5. 9. 28) इति श्रुतेः। भक्त्यतिशयद्योतनार्थः पुनर्नमःशब्दः। इतिशब्दो मन्त्रचतुष्टयसमाप्तिद्योतनार्थः। तदेवं मन्त्रचतुष्टयेन सूर्याभिमानी परमेश्वरः प्रतिपादितः॥

15 उक्तमन्त्रचतुष्टयमादित्योपस्थानाज्यहोमयोरप्यतिदिशति-एतदेवेति। उपस्थानशब्दस्य नपुंसकलिङ्गत्वापेक्षया एतत् इति नपुंसकलिङ्गत्वम्।
17 आहुतिशब्दस्य स्त्रीलिङ्गत्वात्तदपेक्षया एता इति स्त्रीलिङ्गत्वम्। एतद् उक्तं

1. Bl. om. यद्वा,. . . .सुमहच्छब्दयोः भेदो द्रष्टव्यः; P. परo for परं; and P. स्वप्रतिष्ठितरूपाय for स्वरूपाय.
3. P. उक्तपारशब्दार्थाय नमः।, B. उक्तपारशब्दार्थदाय नमः for उक्तः...दात्रे नमः। and P. oविधस्य पारस्य लब्धवते, A. oविधाय पारस्य लब्धये for विधपार..
4. A. पुरा for पुरि.
5. AB. om. first नमः., AB. adds च after पुरुषः and om महापुरुषः.
6. Bl. प्रवृद्धो य इत्यर्थः for प्रवृद्धाय ; B. om. नमः.
7. P. उत्तर for उत्तम.
8. P. मानुष for मनुष्य.
9. Bl. B. उत्तमाय for उक्तयोः.
11. P. नमः। सर्ववेदव्रतं चरतीति गच्छतीति ब्रह्मचारी for नमः इति.....
12. P. Bl. इत्यादिश्रुतेः for इति श्रुतेः.
13. P. चतुर्भिर्मन्त्रैः for मन्त्र.....
15. B. om. आज्य.
16. P. oलिङ्गत्वात्तदपेक्षया for लिङ्गत्वा...
17. P. आज्याहुतिo for आहुतिo ; P. उक्त.

मन्त्रचतुष्टयसाधनम् एव आदित्योपस्थानं व्रताङ्गं सूर्योपस्थानम्। कार्यमिति शेषः। एताः उक्तमन्त्रसाधनाश्चतस्र आज्याहुतयः। कार्या इति शेषः॥

द्वादशेति। द्वादशरात्रस्य द्वादशरात्रसाध्यस्य कृच्छ्रस्य अन्ते अवसाने स्थालीपाकं स्थाल्यां पच्यत इति स्थालीपाकश्चरुः तं श्रपयित्वा पक्त्वा एताभ्यो देवताभ्यः वक्ष्यमाणदेवताभ्यो जुहुयात् होमं कुर्यात्। एताभ्य इत्युक्ता देवता अभिधत्ते- 5
अग्नये स्वाहा इति। प्रथमद्वितीयमन्त्रगतस्वाहाशब्दः उत्तरत्र सर्वत्रानुषज्यते। स्वाहा एवंभूताभ्यो देवताभ्यः सुष्टु हुतमस्तु। इतिशब्दो मन्त्रसमाप्त्यर्थः॥

अथो इति। अथोशब्द आनन्तर्ये वर्तते। कस्मादनन्तरम्। उक्तहोमादनन्तरं ब्राह्मणतर्पणम् अन्नसुवर्णादिकेन ब्राह्मणानां प्रीणनं कुर्यादिति शेषः॥ २ ॥

भ - सत्यं वदेदित्यादिब्राह्मणतर्पणमित्यन्तं साधारणम्। अनार्यैः 10
त्रैवर्णिकव्यतिरिक्तैर्न संभाषेत। एतच्च पतितादीनामप्युपलक्षणम्। रौरवयौधाजये नित्यमन्वहं प्रयुञ्जीत। अनुसवनं सवने सवने प्रातर्मध्यंदिनापराह्णेषु उदकोपस्पर्शनं स्नानकार्यम् आपो हि ष्ठेति शब्दवतीभिस्त्रिभिः॥

अथ उदकस्पर्शादनन्तरमुदकेन तर्पणं कार्यं नमोऽहमायेत्यादि-भिश्चतुर्भिर्मन्त्रैरुभयतो नमस्कारैः। उक्तोऽस्य मन्त्रस्यान्ते द्विर्नमस्कारः। एतदेव 15
एतन्मन्त्रसाधनमेव आदित्योपस्थानं कर्माङ्गम्। तेन नित्यस्योपस्थानस्याव्यावृत्तिः। एतावन्मन्त्रसाधना आज्याहुतयः चतस्रः कार्याः। शिष्टं सुज्ञातमेवेति ॥ २ ॥

**8. एतेनैवातिकृच्छ्रो व्याख्यातः।**

सा - कृच्छ्रस्वरूपं विधाय तदेवातिकृच्छ्रेऽप्यतिदिशति-एतनेति। "हविष्यान् प्रातराशान् भुक्त्वा" इत्यादि "ब्राह्मणतर्पणम्" इत्यन्तेन वाक्यजातेन यत् कृच्छस्वरूप- 20

---

1. P. व्रताङ्ग for व्रताङ्गं. and P. om. इति शेषः.
3. P. om. द्वादशरात्रसाध्यस्य; AB. Bl. om. द्वादशरात्रस्य.
4. P. adds होमार्थं before पक्त्वा.
5. & 6 P. देवतार्थं for देवताभ्यः. P. देवताः समन्त्रका अभिहिताः- 'अग्नये स्वाहा, सोमाय स्वाहा'-इत्यादयः for देवता अभिधत्ते....इति ; P. मन्त्रकृतः for मन्त्रगत.
7. P. आहुतम् for हुतम्.
8. AB. Bl. अत्रातः for अथो; P. adds अथो तस्मात् for कस्मात्.
9. AB. स्वर्ण for सुवर्ण ; Bl. प्रणामं for प्रीणनं.
15. AIR. उक्तम् for उक्तः.
16. AIR. (उ)पाख्यानं for (उ)पस्थानं.
19. AB. Bl. तमेव for तदेव.
20. Bl. (अ)नेन for (अ)न्तेन, Bl. om. वाक्यजातेन.

मुक्तम्, एतेनैव एतादृशेनैव कृच्छ्रस्वरूपेण अतिकृच्छ्रः उक्तलक्षणं कृच्छ्रमतीत्य वर्तमानस्तपोविशेषोऽतिकृच्छ्रः स च व्याख्यातः विशेषेण कथितः ॥

भ - अथ द्वितीयस्य कृच्छ्रस्यातिकृच्छ्रयज्ञकृच्छ्रधर्मानतिदिशति-एतेनेति।

**9. यावत् सकृदाददीत तावदश्नीयात् ॥ ३ ॥**

5 सा - तत्र विशेषमाह-यावदिति। प्रथमे त्र्यहे दिवैवाश्नीयात्, द्वितीये नक्तमेव, तृतीये त्वयाचितमिति पूर्वत्रोक्तम्। अत्र तु तेषु कालेषु यावत्प्रमाणमशनीयं सकृत् एकवारम् आददीत स्वीकुर्यात्, दक्षिणेन पाणिनेति शेषः। तावत्प्रमाणमेव अश्नीयात्। न पुनर्ग्रासनियमोऽयम्। सकृदात्तं यावद्भ्यो ग्रासेभ्यः पर्याप्तं तावतो ग्रासान् ग्रसेत्। शेषान् व्रतनियमान् पूर्ववदाचरेदित्यर्थः ॥ ३ ॥

10 भ - अयं तु विशेष इत्याह-यावदिति। प्रथमे त्र्यहे दिवैवाश्नीयात्, द्वितीये नक्तमेव, तृतीयेऽयाचितमित्युक्तं [तत्] पूर्ववत्। अत्र तेषु कालेषु यावत्प्रमाणमशनीयं दक्षिणेन पाणिना सकृदाददीत तावदेवाश्नीयात्। तेन [न] पुनर्ग्रासनियमोऽयम्। सकृदात्तं यावद्भ्यो ग्रासेभ्यः पर्याप्तं तावतो ग्रासान् ग्रसेदिति ॥ ३ ॥

**10. अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः ॥ ४ ॥**

15 सा - अथ कृच्छ्रातिकृच्छ्रस्य विशेषमाह-अब्भक्ष इति। अब्भक्षः आप एव भक्षो यस्य स तथोक्तः तृतीयः। कृच्छ्रादीनां त्रयाणां योऽन्त्यस्त्रित्वसंख्यापूरकः, सः तादृशः कृच्छातिकृच्छ्रः कृच्छ्रातिकृच्छ्राववलम्ब्य स्थितत्वादेतन्नामको भवेत्। अस्मिन्
18 कृच्छ्रातिकृच्छ्रे एतावांस्तु विशेषः--पूर्वोक्तप्रातरादिकालेष्वाप एव भक्षाः स्युरिति।

---

1. P. एतादृक्कृच्छ्रस्वरूपेणैव for एता० and P. ०लक्षणकृच्छम् for ०लक्षणं कृच्छ्रं.
5. P. adds अथ before प्रथमे० see CN. and B. द्वितीयत्र्यहे for द्वितीयें ;
6. B. om. first तु; P. पुर्वोक्तम् for पूर्वत्रोक्तम्. BBl. add यत् after यावत्.
7. Bl. om. एव;
8. Bl. AB. om. अयम्; A. adds यावत् before सकृत. and P. adds इत्यर्थः after ग्रसेत्.
9. PBl. om. इत्यर्थः.
11. R. deletes from अत्र तेषु. . .up to कृच्छ्रवदेवैतं तृतीयं चरेद् of the next paragraph.
12. Al. सकृदादीतं for सकृदात्तं.
14. SS. तृतीयं for तृतीयः see CN.
15. P.Bl. कृच्छ्रविशेषम् for ०कृच्छ्रस्य. . .
16. BBl. om. कृच्छ्रादीनां . . . योन्त्यः.
17. P. कृच्छ्रमवलम्ब्यावस्थितत्वात् for कृच्छ्रातिकृच्छ्रम० Bl. आलम्ब्य. for अवलम्ब्य.
18. Bl. तावांस्तु for एतावांस्तु, P. भक्ष्याः for भक्षाः

तावद्व्रतनियमं कृच्छ्रवदाचरेदित्यर्थः॥ ४ ॥

भ - अथ कृच्छ्रातिकृच्छ्रस्याह-अब्भक्ष इति। उक्तेषु प्रातरादिकालेषु अब्भक्षो भवेत् अप एव भक्षयेत् कृच्छ्रवदेवैतं तृतीयं चरेदिति वाक्यशेषः। स पूर्वोक्तानां त्रयाणां कृच्छ्रातिकृच्छ्रो नामेति। अथवा अब्भक्षः इति कृच्छ्रविशेषणम्। अस्मिन्नाप एवोक्तकालेषु भक्षाः स्युरिति॥ ४ ॥ 5

**11. प्रथमं चरित्वा शुचिः पूतः कर्मण्यो भवति। द्वितीयं चरित्वा यत्किञ्चिदन्यन्महापातकेभ्यः पापं कुरुते तस्मात् प्रमुच्यते। तृतीयं चरित्वा सर्वस्मादेनसो मुच्यते ॥ ५ ॥**

सा - अथैतेषां त्रयाणां प्रत्येकं फलविशेषमाह-- प्रथममिति। प्रथमंपूर्वोक्तानां त्रयाणां मध्ये आदिमं कृच्छ्राख्यं तपोविशेषं चरित्वा शुचिः पापेभ्यः शुद्धः अत एव 10 पूतः पावमानीकर्मार्हः। पावमानीं प्राप्तः सन् कर्मण्यः यज्ञादिकर्मयोग्यो भवति। तथा द्वितीयं तेषां मध्ये द्वित्वसंख्यापूरकमतिकृच्छाख्यं तपोविशेषं चरित्वा महापातकेभ्योऽन्यद् अनिरुक्तं यत्किञ्चित् पापं कुरुते तस्मात् उपपातकपर्यन्तात् पापात् प्रमुच्यते प्रकर्षेण मुच्यते। तथा तृतीयम् उक्तानां मध्ये त्रित्वसंख्यापूरकं कृच्छ्रा-तिकृच्छ्राख्यं चरित्वा सर्वस्मात् महापातकसहिताद् अशेषाद् एनसः पापात् मुच्यते॥ ५ ॥ 15

भ - अथैतेषां त्रयाणामेकैकस्य समस्तानां च फलविशेषमाह--प्रथमं चरित्वेत्यादिनानुवाकशेषेण। विधिक्रमापेक्षमेतेषां प्रथमं[चरि]त्वेति। अर्थश्च निगदसिद्धः। तदनु द्वितीयेनोपपातकपर्यन्तानि पातकानि पश्यति। तृतीयेन महापातकान्यपि इत्युक्तम्। इदमर्थवादमात्रमुत फलकथनम्? फलकथनमेव। फलान्तराश्रवणात्। अश्रुतेऽपि फले विश्वजिदादिषु[यथा] फलं स्वर्गादि, तद्व[दि]ह 20

---

1. P. इतरद् for तावद्.
3. A. oएतानि for एतं.; R. om. from अत्र तेषु of the Previous paragraph up to कृच्छ्वदेवैतं तृतीयं चरेत्.
4. RAl. कृच्छ्रोऽo for कृच्छ्रा.
9. P. अथ तेषां for अथैतेषां.

A. does not have commentary on this and the next concluding paragraphs, B. ends this खण्ड with this paragraph and repeats the last word मुच्यते twice assuring us the खण्ड concludes with this paragraph. This also does not have commantary on this.

11. Bl. om. सन्.
13. Bl. adds वा after अन्यद्.
14. Bl. om. पापात् प्रमुच्यते.
18. RAl. पश्यन्ति for पश्यति.

कल्प्यते फलम्?। नैवम्। अर्थानुपपत्त्या हि फलं कल्प्यते। आर्थवादिकफले[षु] श्रूयमाणेषु विपरिवर्तमानफलान्तरकल्पनायां प्रमाणाभावात्। यथा रात्रिपक्षेषु श्रूयमाणत्वादार्थवादिकप्रतिष्ठादि फलत्वेन निर्णीतं तद्वदिह स्यात्। यद्येवं महापातकेषु द्वादशवर्षकृच्छ्रादिविधानमनर्थकं स्यात्। तस्मादस्य रहस्यं प्रमादादिकृतेऽप्येतदेव
5 प्रायश्चित्तमिति द्रष्टव्यम्।। ५ ।।

**12. अथैता९स्त्रीन् कृच्छ्रा९श्चरित्वा सर्वेषु वेदेषु स्नातो भवति। सर्वेषु देवेषु ज्ञातो भवति। यश्चैवं वेद यश्चैवं वेद।। ६ ।। ।। २ ।।**

सा - अथ वेदितुः फलमाह--सर्वेष्विति। उक्तानुष्ठानापेक्षः चशब्दः। यः पुमान् एवम् उक्तप्रकारेण कृच्छ्रादिकं वेद सम्यग्जानाति, "वेदमधीत्य स्नायात्"-
10 इत्यादीनि यानि स्नानादिव्रताङ्गभूतानि वेदेषु सन्ति तैः सर्वैः एवंवित् स्नातो भवति इत्यर्थः। किंच सर्वेषु देवेषु इन्द्रादिषु ज्ञातो भवति। सर्वे देवा एतत्तपःकर्ता महानित्यवगच्छन्तीत्यर्थः।। ६ ।।

द्विरुक्तिः खण्डसमाप्तिद्योतनार्था।। २ ।।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये द्वितीयः खण्डः।। २ ।।

16 ।। इति द्वितीयः खण्डः।।

---

1. RAl. कल्पते for कल्प्यते; RAl. अर्थानुपपद्यादि for अर्थाo and RAl. कल्पते for कल्प्यते; RAl. आर्थवादिक (के AL) फला. (ले R) श्रयमाणेषु द्वौ विपरिवर्तमान (ने Al) फलान्तकल्पनायां for आर्थo. . .
3. RAl. सूयमान (स्नपमाण) त्वाद् for श्रूयमणत्वाद् o
4. RAl. द्वादशवर्षकादि for द्वाo . . . .
7. My TA सर्वैर्देवैः for सर्वेषु देवेषु.
8. A. after सर्वेष्विति reads. स्पष्टोर्थः। समुच्चयफलमप्युक्त्वा वेदनं फलमाह-यश्चैवं वेद यश्चैवं वेद इति। द्विरुक्तिरनुवाकसमाप्त्यर्था।। द्वितीयः खण्डः।। and concludes the chapter.
10 Bl. स्नानानि. for स्नानादि. and Bl. सम्मतैः for सन्ति तैः; Bl. om. oवित् from एवंवित्.
13. Bl. oद्योतनार्थं for oद्योतनार्था.

## तृतीयः खण्डः

**1. अथातः स्वाध्यायाध्ययनस्य॥ १ ॥** 1

सा - द्वितीयखण्डे तपःस्वरूपं विधाय, तृतीये स्वाध्यायाध्ययनं विधातुमादौ प्रतिजानीते--अथात इति। अथ तपोव्याख्यानानन्तरं, यतः स्वाध्यायाध्ययनप्रभावेन स्वर्गप्राप्तिः, अतः कृत्स्नस्य स्वाध्यायाध्ययनस्य साधारणान् धर्मान् व्याख्यास्याम इति शेषः॥ १ ॥ 5

भ - तपोव्याख्यानतोऽनन्तरं स्वाध्यायाध्ययनस्य साधारणान् धर्मान्[व्या] ख्या [स्या]म इत्यनुषङ्ग इति॥

**2. काममुक्त्वोपक्रामेदन्ते वा। त्रीन् कृच्छ्रांश्चरित्वा पूतो भवति। अग्निं प्रतिष्ठाप्याग्न्यभावे तूदकमादित्यं वोपसमाधाय दर्भानुपस्तीर्य दर्भेष्वासीनः प्राक्कूलेषूदक्कूलेषु वा दक्षिणेन पाणिना दर्भमुष्टिं गृहीत्वा॥** 10

सा - अथ वक्ष्यमाणानां साधारणधर्ममाह--काममिति। उपक्रमात् पूर्वं कामं कमनीयं फलं मेऽस्त्वित्युक्त्वा स्वाध्यायम् उपक्रामेत्। अन्ते स्वाध्यायाध्ययनस्य समाप्तौ वा कामं वदेत्। त्रीनिति। स्वाध्यायोपक्रमात् पूर्वं त्रीन् कृच्छ्रान् पुर्वोक्तान् त्रिविधान् कृच्छ्रसंज्ञकान् तपोविशेषान् चरित्वा पूतः स्वाध्यायाध्ययनार्हो भवति। अग्निमिति। कृच्छ्रानुष्ठानानन्तरं स्वाध्यायाध्ययनं कर्तुमिच्छन् पुरुषः अग्निं प्रतिष्ठाप्य 16

---

A & B. do not stop at अथातः स्वाध्यायाध्ययनस्य but continue further and end the paragraph after पूतो भवति. In A, the commentary of this portion runs:-अथ कृच्छ्रानुष्ठानानन्तरम् अ(तो)हेतोः स्वाध्यायाध्ययनं कर्तुमिच्छन् पुरुष आदावन्ते वा त्रीन् कृच्छ्रान् चरित्वा 'कामं' यथेच्छमुक्त्वा स्वयमधिकृत्य अनन्तरं वक्तुमुपक्रमेदित्यर्थः।.

In B. अथ कृच्छ्राचरणानन्तरम् अतः यतः स्वाध्यायाध्ययने पूतत्वेनाधिकारः (अतः स्वाध्या)यो वेदः स्वा (ध्यायस्या) ध्यायनमभ्यासं (?सः) वक्ष्यमाणनियमपुरःसरं तस्य कामः (०मं Bl) काम्यत इति फलं तमुक्त्वा संकल्प्य (०ल्पं Bl.) एतत्फलकामः एतदध्ययनं करिष्य इति त्रीनपि कृच्छ्रांश्चरित्वा पूतो भवतीति उपक्रामेत् आरभेत। यद्वा, कामानुसारेणाध्ययनं कृत्वा तदन्ते। कृच्छ्रनियममाह-अग्निं प्रतिष्ठाप्येति।; Bl. closely follows B. with minor corrections.

2. Bl. विधेयं for विधातुम्.

10. M. दर्भान् प्रस्तीर्य for दभानुप० B. om. दर्भानुपस्तीर्य; My प्राकृतलेषूदक्तलेषु० for प्राक्कूलेषु०.

16. A. om. कृच्छ्रानुष्ठानानन्तरं . . .पुरुषः.and Bl. om. (अ)ध्ययनं.

अग्निस्थापनं कृत्वा, तत्समीपे उपविश्येत्यर्थः। अग्न्यभावे तूदकम् अग्निव्यतिरिक्ते प्रदेशे तु नदीपर्वतादिके उदकं वा आदित्यं वोपसमाधाय समीपे निधाय, तयोरन्यतरस्य समीपे उपविश्येत्यर्थः। दर्भान् कुशान् उपस्तीर्य भूमावास्तरणं कृत्वा एवं भूतेष्वास्तृतेषु दर्भेषु आसीनः प्राङ्मुख उपविष्टः स्वाध्यायमधीयीतेतिशेषः। कीदृशेषु दर्भेषु? 5 प्राक्कूलेषूदक्कूलेषु वा प्रागग्रेषु उदगग्रेषु वा। किं कृत्वा? दक्षिणेन हस्तेन दर्भमुष्टिं मुष्टिपूरितदर्भान् गृहीत्वा वक्ष्यमाणानि सामान्यधीयीतेति शेषः॥

भ - अथ विवक्षितान् साधारणान् धर्मानाह-काममुक्त्वोपक्रामेदित्यादिना दक्षिणेन पाणिना दर्भमुष्टिं गृहीत्वेत्यन्तेन। उपक्रमात् पूर्वं कामं कमनीयं फलमुक्त्वा आदौ "मे फलं भूयाद्" इत्युक्त्वा स्वाध्यायम् उपक्रामेत्। अन्ते समाप्तौ वा 10 स्वाध्यायाध्ययनस्य कामं ब्रूयात्। उपक्रमात् पूर्वं त्रीन् कृच्छ्रान् पूर्वोक्तांश्चरित्वा पूतः स्वाध्यायाध्ययनयोग्यो भवति। कृच्छ्रान्तेऽध्ययनं चिकीर्षन् अग्निं प्रतिष्ठाप्य अधीयीत। अग्न्यभावे तूदक[म]ाशयस्थम् आदित्यं वा उपसमाधाय समीपे निधाय तयोरन्यतरस्य समीप उपविश्येत्यर्थः। दर्भान् भूमावुपस्तीर्य तेषूपस्तीर्णेषु प्राक्कूलेषु उदक्कूलेषु वासीनः प्राङ्मुखो दक्षिणेन पाणिना दर्भमुष्टिं गृहीत्वा अधीयीतेति शेषः॥

15 **3. प्रथमं त्रिवर्गं नवकृत्वो नवकृत्वो गायेत्॥**

**4. एवं सदा प्रयुञ्जानोऽग्न्याधेयमवाप्नोति॥ २ ॥**

सा - अथाध्ययनप्रकारमाह--प्रथमं त्रिवर्गमिति। प्रथमं प्रथमायां "अग्न आयाहि वीतये" (साम. I. 1.) इत्यस्यामृच्युत्पन्नं त्रिवर्गं वर्गाः सामानि, सामत्रयं नवकृत्वो नवकृत्वः वीप्सा सर्वार्था। त्रीण्यपि सामानि प्रत्येकं नववारावृत्त्या गायेत्॥

20 अथ प्रयोगेण प्राप्तव्यं फलमाह--एवमिति। एवम् उक्तनियमपूर्वकं प्रथमं

---

1. P. Bl. om. (उ)दकं; AB. Bl. oरिक्तप्रदेशे for oरिक्ते....
2. P. om. first वा.
3. Before दर्भान् A adds अग्न्यभावे तूदकमिति विकल्पात्; AB. कुशान् for कुशान्.
4. AB. Bl. प्राङ्मुखोपविष्टः for प्राङ्मुखः....
6.. A. om. मुष्टिपूरितदर्भान्. B. adds गृहीत्वा before मुष्टिपूरितदर्भान् too.
10. RAl. त्रीणि for त्रीन्
11. RAl. उच्छान्ते for कृच्छ्रान्ते
13. R. oस्तीर्यात्तेवुपस्तणेषु, Al. oस्तीर्याप्तेषुपस्तीर्णेषु for oस्तीर्य...
16. My. आप्नोति for अवाप्नोति
17. AB. Bl. om. अथ
19. P. सर्वाण्यपि for त्रीण्यपि.

त्रिवर्गमित्याद्युक्तप्रकारेण सदा सर्वदा विशेषाश्रवणान्नित्यानुष्ठानव्यतिरिक्ते काले एकस्मिन्नेवाहनि सततं प्रयुञ्जानः अग्न्यधेयं सप्तपार्थिवादिसंभारानारोप्याग्निं मथित्वा त्रिष्वपि स्थानेषु अग्निस्थापनं, तद् अवाप्नोति। तेन यत् फलं तत् प्राप्नोतीत्यर्थः॥

नन्वग्न्याधानस्य सर्वक्रत्वर्थत्वान्न पृथक् फलमस्ति। अतः कथं तदवाप्तिरूप-फलाभिधानम्? इति न। 5

"या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः"[रामा-अर.68.29] इत्यादिना यज्ञव्यतिरेकेणैव फलश्रवणात्। एवमुत्तरत्र पवमानाग्निहोत्राद्यवाप्तिवचनेष्वप्यवाप्तव्यं तत्तत् फलमिति मन्तव्यम्। अथवा आधानादीन्येवाप्नोति। तदवाप्तौ तत्फलस्यावश्यकत्वाद्; वैतानिकानामग्निहोत्रादिकर्मणामाधानपूर्वकत्वात् प्रथमं तदवाप्तेरभिधानम् ॥ २ ॥

भ - अथ अग्न्याधेयं प्र[ा]कृतिकवैकृति[क]ाग्निनी (ग्नीनां?) कर्मणां प्राप्यमग्न्याधेयफलकामस्याह--प्रथममिति। प्रथमं त्रिवर्गम् "अग्न आयाहि वीतये" इत्यस्यां प्रथमायामधीतानि त्रीणि सामानीत्यर्थः। एकैकं साम नवकृत्वो गायेत्॥ 10

सदा संततमित्यर्थः। विशेषादर्शनादेकमहोरात्रं नित्यकर्माविरोधेन सततं प्रयुञ्जानोऽग्न्याधेयमाग्नेयाष्टाकपालयागपर्यन्तमवाप्नोति।

"या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः" [रामा. अर 68.29] इति पृथक्प्रसाधकत्वस्याग्न्याधेयस्यावगतत्वात्। अग्न्याधेयस्य च संस्कारेषु चत्वारिंशत्सु परिगणितत्वात्। अत्र च संख्याविशेषस्याश्रवणादेकमेवाहोरात्रं जपः कार्यः॥ २ ॥ 15

**5. इन्द्राय पवते मद इति पवमानहवीꣳष्येतेन कल्पेन॥ ३ ॥**

सा - अथ पवमानेष्टिफलसाधनोपमाध्ययनप्रयोगमाह--इन्द्रायेति। एतेन 19

---

1. P. om. आदि ; AB. ०रिक्तकाले for ०रिक्ते. . .
3. After अग्निस्थापनं A.Bl. add अग्न्याधानं and A. तदवाप्नोतीति for तत्प्राप्नोतीत्यर्थः.
4. Bl. om. ननु.
5. After न P. adds वक्तव्यम्
7. AB. Bl. om. अपि
8. After फलं P. adds अस्ति; P. तत्प्राप्तौ for तदवाप्तौ.
9. AB. Bl. अवाप्त्यभिधानम् for अवाप्तेः. . . .
13. RAl. विशेषो० for विशेषा०
14. RAl. आग्नेयोऽ० for आग्नेया०
18. My. पावमान० for पवमान०
19. P. पवमानेष्टिप्रतिनिधिरूपमध्ययनप्रयोगम्, A. पवमानेष्टिसाधन प्रतीति-पमाध्ययनप्रयोगम् for पवमानेष्टि०

"अग्निं प्रतिष्ठाप्य" इत्यारभ्य "दर्भमुष्टिं गृहीत्वा" इत्यन्तेन कल्पेन इन्द्राय पवते मद (I.520) इति अस्यामुत्पन्नं साम प्रयुञ्ज्यात्। पवमानहवींषि। 'यदग्नये पवमानाय' 'यदग्नये पावकाय' 'यदग्नये शुचये' इति विहितास्तिस्र इष्टयः पवमानहवींषीत्युच्यन्ते। आधानाधिकृतस्यैवैषु हविःष्वधिकारात् तत्प्रयोगानन्तरमपरस्मिन्नहनि एतत्कार्यमिति
5 ज्ञायते।

न चाधानपवमानेष्ट्योरग्नेर्यागयोग्यतोत्पादनारूपत्वकार्यैकत्वात् पृथक्-पवमानहविरवाप्तिवचनं न युक्तमिति वाच्यम्। आधानवत् पृथगेवाग्नि संस्कार-कत्वात् ॥ ३ ॥

भ - एतेन पूर्वोक्तेन कल्पेन 'अग्निं प्रतिष्ठाप्य' इत्यादिना 'दर्भमुष्टिं गृहीत्वा'
10 इत्यन्तेनोक्तेन कल्पेन एव तत्साम एकरात्रं सदा प्रयुञ्जीत। पनमानहवींषि आप्नोति। आहिताग्नेरधिकृतत्वात् पवमानहविषि प्रथमस्य त्रिवर्गस्याग्न्याधेयप्रासाधस्य प्रयोगादूर्ध्वं कस्मिंश्चिदहनि एतत्कार्यमिति ज्ञायते। तस्य चाग्न्याधेयस्य पवमानहविषां च साम्नामाहवनीयादिसिद्ध्यर्थत्वेन प्रसिद्धेः। किमिदं वृथा(प्रथक्?) कीर्तनमिति चेत्, [न]। अग्न्याधेयस्य पवमानहविषातिरक्तस्यापि आहवनीयादिसाधनत्वेन श्रूयमाणत्वात्, कात्यायना[दि]
15 भिरुक्तत्वादिति॥

## 6. सुवर्महाः सुवर्मया इत्येताभ्यां दर्शपूर्णमासावेतेनैव कल्पेन ॥ ४ ॥

सा - अथ दर्शपूर्णमाससाधनमध्ययनप्रयोगमाह-सुवर्महा इति। उक्ताभ्यां
19 सामभ्यामेतेनैव उक्तेनैव कल्पेन अधीयानः पुरुषो दर्शपूर्णमासौ अवाप्नोति। अत्रोक्ते

---

1. P. अग्निं प्रतिष्ठाप्य दर्भमुष्टिं गृहीत्वा इत्येतेन for "अग्निं. . .
2. A. उत्पन्नानि सामानि त्रीणि प्रयुञ्ज्यात्, PBl. उत्पन्नं. . . प्रयुञ्जन् for उत्पन्नं साम प्रयुञ्ज्यात्
4. P. अथ कृताधानस्यैतेषु हविःषु for आधानo and A. परास्मन् for अपरस्मिन्
6. P. योग्यतोत्पादनानुरूपकार्यैकत्वात् पृथक् सवनं हविरवाप्तिवचनं. A. यागयोर्यज्ञोत्पादनरूपत्वo for यागयोग्यतोत्o
10. RAl. हविंषी for हविषि.
11. Al. प्रासादम्य for प्रासाधस्य.
13. RAl. समुताम् for साम्नाम् and After प्रसिद्धेः RAl read:-किमिदं दय्यत्कीर्तनमेतत्। अग्र्याधेयस्य पवमानद्दविंषीतिरिक्तस्यापि आहवनीयादिसिद्धा (R द्ध्य) र्थत्वेन प्रसिद्धेः।
16. T. o मास्यावेतेन कल्पेन for oमासाo.
18. P. o मासार्थं च स्वाध्यायप्रयोगम् for oमाससाधनम्. . . . .
19. BBl. add स्वर्महा स्वर्मया इति before अत्रोक्ते.

